आत्मविश्वासः सर्वेणापि इष्यते एव । उत्तमं साहित्यमपि आत्मविश्वासं वर्धयति । आत्मविश्वासवर्धकानि कानिचन सुभाषितानि अधः दत्तानि सन्ति ।

विघ्नं केचित्तु निन्दन्ति कश्चिदन्यत्र गच्छति ।
साधको विघ्नमुत्पाट्य सुखं कीर्तिं च विन्दति ।।

[विघ्नं सन्तोषनाशकम् इष्टविघातकं च मत्वा केचन निन्दन्ति । अन्ये केचन विघ्नात् भीताः सन्तः पलायन्ते । किन्तु साधकाः धीराः च विघ्नं समूलम् उत्पाट्य सुखं कीर्तिं च प्राप्नुवन्ति ।]

आस्तिक्यं चात्मविश्वासो ह्युत्साहः कार्यनिष्ठता ।
चतुस्सूत्री समाख्याता मालवीयमहात्मनः ।।

[मदनमोहनमालवीयः सर्वैः अपि ज्ञायते एव । 'विघ्नैः पुनः पुनरपि प्रतिहन्यमाना आरब्धमुत्तमजना न परित्यजन्ति' इत्यस्याः नीतेः प्रत्यक्षम् उदाहरणम् आसीत् सः । सः कार्यसाधनाय अपेक्षितान् चतुरः अंशान् 'चतुस्सूत्री'शब्देन निर्दिशति । ते च चत्वारः अंशाः – १. आस्तिक्यभावः (देवे श्रद्धा) २. आत्मनि विश्वासः ३. सर्वदा कार्योत्साहः ४. आत्मना क्रियमाणे कार्ये निष्ठा चेति ।]

बाहू मे बलमिन्द्रियम् । हस्तौ मे कर्म वीर्यम् ।

बाहू मे बलमिन्द्रियम् । हस्तौ मे कर्म वीर्यम् ।
आत्मा मे क्षत्रमुरो मम ।।

[मम हस्तौ बलयुक्तौ स्याताम् । तौ सत्कार्यनिर्वर्तने समर्थौ भवेताम् । मम सर्वाणि इन्द्रियाणि अपि सर्वकार्यसमर्थानि शक्तियुतानि च भवेयुः । मम अन्तरात्मा हृदयं च अन्येषां दुःखस्य निवारणे प्रवृत्तिं दर्शयेताम् ।]

कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः ।

[अहं दक्षिणहस्तेन कार्यं करोमि । जयस्तु मम वामहस्ते तिष्ठति एव । सम्यक् कृतस्य कार्यस्य फलम् अवश्यमेव प्राप्येत इति तात्पर्यम् ।]